॥ श्रीः ॥

# ॥ समासचक्रम् ॥

षोढा समासः संक्षेपादष्टाविंशतिधा पुनः ।

नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥१॥

तत्राष्टधा तत्पुरुषः सप्तधा कर्मधारयः ।

सप्तधा च बहुव्रीहिर्द्विगुराभाषितो द्विधा ॥२॥

द्वन्द्वोऽपि द्विविधो ज्ञेयोऽव्ययीभावो द्विधा मतः ।

तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् ॥३॥

चकारबहुलो द्वन्द्वः स चासौ कर्मधारयः ।

यस्य येषां बहुव्रीहिः शेषस्तत्पुरुषः स्मृतः ॥४॥

कर्तृकर्मक्रियायुक्तः प्रयोगः स्यात्सकर्मकः ।

अकर्मकः कर्मशून्यः कर्मद्वन्द्वो द्विकर्मकः ॥५॥

॥ अथ बालबोधार्थं प्रयोगविधिः कथ्यते ॥

प्रयोगाः पञ्चविधाः सकर्मकोऽकर्मकः कर्मणि भावे द्विकर्मकश्चेति भेदात् ।

सकर्मकः प्रयोगे यथा – कृष्णो भक्तान् रक्षति ॥१॥

अकर्मकः प्रयोगो यथा – कृष्णस्तिष्ठति ॥२॥

कर्मणि प्रयोगो यथा – विष्णुना प्रपञ्चः क्रियते ॥३॥

भावे प्रयोगो यथा – कृष्णेन स्थीयते ॥४॥

द्विकर्मकः प्रयोगो यथा – धरामन्नं दुदोह ॥५॥

॥ इति प्रयोगविधिः ॥

॥ अथ समासविधिः कथ्यते ॥

समासाः षड्विधाः । तत्पुरुषः कर्मधारयो बहुव्रीहिर्द्विगुर्द्वन्द्वोऽव्ययीभावश्चेति भेदात् ।

तल्लक्षणानि तु – पूर्वपदार्थः प्रधानोऽव्ययीभावः । उत्तरपदार्थः प्रधानस्तत्पुरुषः । उभयपदार्थप्रधानो द्वन्द्वः । अन्यपदार्थः प्राधानो बहुव्रीहिः । द्विगुकर्मधारयौ तत्पुरुषभेदौ ।

समासार्थावबोधकं वाक्यं विग्रह इति ॥ तत्राष्टधा तत्पुरुषः क्रमः । प्रथमातत्पुरुषो द्वितीयातत्पुरुषस्तृतीयातत्पुरुषश्चतुर्थीतत्पुरुषः पञ्चमीतत्पुरुषष्षष्ठीतत्पुरुषस्सप्तमीतत्पुरुषो नञ्तत्पुरुषश्चेति ॥

प्रथमातत्पुरुषो यथा – अर्धं पिप्पल्याः अर्धपिप्पली । पूर्वंकायस्येति पूर्वकायः ॥

द्वितीयातत्पुरुषो यथा – कृष्णं श्रितः कृष्णश्रितः । ग्रामं गतो ग्रामगतः । कान्तारमतीतः कान्तारातीतः ॥

तृतीयातत्पुरुषो यथा – शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । मासेन पूर्वो मासपूर्वः ॥

चतुर्थीतत्पुरुषो यथा – यूपाय दारु यूपदारु । कुण्डलाय हिरण्यं कुण्डलहिरण्यम् । गुरवे दक्षिणा गुरुदक्षिणा ॥

पञ्चमीतत्पुरुषो यथा – अर्थात् अपेतः अर्थापेतः । सिंहात् भयं सिंहभयम् । वृश्चिकात् भीः वृश्चिकभीः ॥

षष्ठीतत्पुरुषो यथा – कृष्णस्य भक्तः कृष्णभक्तः । आम्रस्य फलम् आम्रफलम् । राज्ञः पुरुषः राजपुरुषः ॥

सप्तमीतत्पुरुषो यथा – अक्षेषु शौण्डः अक्षशौण्डः । कर्मणि कुशलः कर्मकुशलः । विद्यायां निपुणः विद्यानिपुणः ॥

नञ्तत्पुरुषो यथा – न ब्राह्मणः अब्राह्मणः । न वृषभः अवृषभः । पापाभावः अपापम् । धर्मविरुद्धोऽधर्मः ॥

॥ इति तत्पुरुषः ॥

॥ अथ कर्मधारयः कथ्यते ॥

स च विशेषणपूर्वपदो विशेष्यपूर्वपदो विशेषणोभयपद उपमानपूर्वपद उपमानोत्तरपदः सम्भावनापूर्वपदोऽवधारणापूर्वपदश्चेति भेदात्सप्तविधः ॥

तत्र विशेषणपूर्वपदः कर्मधारयो यथा – कृष्णश्चासौ सर्पश्च कृष्णसर्पः । कृष्णौ च तौ सर्पौ च कृष्णसर्पौ । कृष्णाश्च ते सर्पाश्च कृष्णसर्पाः । रक्ता चासौ लता च रक्तलता । रक्ते च ते लते च रक्तलते । रक्ताश्च ताः लताश्च रक्तलताः । नीलं च तत् उत्पलं च नीलोत्पलम् । नीले च ते उत्पले च नीलोत्पले । नीलानि च तानि उत्पलानि नीलोत्पलानि ॥

विशेष्यपूर्वपदः कर्मधारयो यथा – वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः । गोपालश्चासौ बालश्च गोपालबालः ॥

विशेषणोभयपदः कर्मधारयो यथा – शीतं च तत् उष्णं च शीतोष्णम् ॥

उपमानपूर्वपदः कर्मधारयो यथा – मेघ इव श्यामः मेघश्यामः । कम्बुवत् ग्रीवा कम्बुग्रीवा । चन्द्रवत् मुखं चन्द्रमुखम् ॥

उपमानोत्तरपदः कर्मधारयो यथा – पुरुषः व्याघ्र इव पुरुषव्याघ्रः । नरः सिंह इव नरसिंहः ॥

सम्भावनापूर्वपदः कर्मधारयो यथा – गुण इति बुद्धिः गुणबुद्धिः ॥

अवधारणापूर्वपदः कर्मधारयो यथा – विद्यैव धनं विद्याधनम् । अविद्यैव श्रृङ्खला अविद्याश्रृङ्खला ॥

मध्यमपदलोपी समासो यथा – शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणः देवब्राह्मणः ॥

॥ इति कर्मधारयः ॥

॥ अथ बहुव्रीहिः कथ्यते ॥

स च द्विपदो बहुपदः सहपूर्वपदः सङ्ख्योत्तरपदः सङ्ख्योभयपदो व्यतिहारलक्षणो दिगन्तराललक्षणश्चेति भेदात्सप्तविधः।

तत्र द्विपदबहुव्रीहिर्यथा – चित्राः गावो यस्य सः चित्रगुः गोपः। प्राप्तम् उदकं येन सः प्राप्तोदको ग्रामः। भुक्तम् ओदनं येन सः भुक्तौदनो राजा। निर्जितः कामः येन सः निर्जितकामः शिवः। विभक्तं धनं यैस्ते विभक्तधना बन्धवः। दत्तः सूपः यस्मै सः दत्तसूपो ब्राह्मणः। उद्धृतं धनं यस्मात् तत् उद्धृतधनं कुण्डम्। चक्रं पाणौ यस्य सः चक्रपाणिः हरिः। करे स्थितं धनं यस्य सः करस्थितधनो वणिक्। पुष्पिताः द्रुमाः यस्मिन् सः पुष्पितद्रुमः आरामः। बहवो यज्वानो यस्यां सा बहुयज्वा शाला। पुष्पिताः द्रुमाः यस्मिन् तत् पुष्पितद्रुमं वनम्। खरस्य मुखमिव मुखं यस्य सः खरमुखस्तुरगः। उष्ट्रस्य मुखमिव मुखं यस्य सः उष्ट्रमुखो यक्षः। उच्चैर्घटो यस्याः सा उच्चैर्घटा नारी।

अङ्गगात्रोदरस्तनकण्ठोष्ठदन्तमुखाक्षिकेशाः स्त्रियां बहुव्रीहौ ईबन्ता भवन्ति।

ते च यथा – सुन्दरम् अङ्गं यस्याः सा सुन्दराङ्गी। शोभनं गात्रं यस्याः सा सुगात्री। कृशम् उदरं यस्याः सा कृशोदरी। चारू स्तनौ यस्याः सा चारुस्तनी। इन्दीवरे इव अक्षिणी यस्याः सा इन्दीवराक्षी। कम्बुरिव कण्ठो यस्याः सा कम्बुकण्ठी। कुटिलाः केशाः यस्याः सा कुटिलकेशी।

इतरेषाम् अङ्गादिवाचकानां स्त्रीत्वेऽपि आबन्तत्वमेव। चारुदेहा विस्तृतालका आवृतकुचा कुन्ददशनेत्यादि। उरुपृथुलघुबहुपटुऋजुस्वादुचारुमृदुशब्दानां स्त्रीलिङ्गविशेषणत्वे ईबन्तत्वमपि। यथा – मृद्वी शाटी लघ्वी भाषेत्यादि। इति द्विपदबहुव्रीहिः॥

बहुपदो यथा – अधिकः उन्नतः अंसो यस्य सः अधिकोन्नतांसः॥

सहपूर्वपदो यथा – सह कृष्णेन वर्तत इति सकृष्णः। सह पुत्रेण सपुत्रः। रामेण सह वर्तत इति सरामः॥

सङ्ख्योत्तरपदो यथा – दशानां समीपे ये सन्ति ते उपदशाः ॥

सङ्ख्योभयपदो यथा – द्वौ वा त्रयो वा द्वित्राः ॥

व्यतिहारलक्षणो यथा – केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति केशाकेशि युद्धम्। दण्डैर्दण्डैः कृत्वा इदं युद्धं प्रवृत्तम् इति दण्डादण्डि ॥

दिगन्तराललक्षणो यथा – दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा॥

॥ इति बहुव्रीहिः ॥

॥ अथ द्विगुः कथ्यते ॥

द्विगुसमासो द्विविधः – एकवद्भावी अनेकवद्भावी चेति।

एकवद्भावी द्विगुर्यथा – त्रयाणां श्रृङ्गाणां समाहारस्त्रिश्रृङ्गम्। पञ्चानां फलानां समाहारः पञ्चफली ॥

अनेकवद्भावी द्विगुर्यथा – सप्त च ते ऋषयश्च सप्तर्षयः ॥

॥ इति द्विगुः ॥

॥ अथ द्वन्द्वः कथ्यते ॥

द्वन्द्वो हि द्विविधः। इतरेतरयोगसमाहारभेदात्।

इतरेतरयोगद्वन्द्वो यथा – प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। रामश्च कृष्णश्च रामकृष्णौ ॥

समाहरद्वन्द्वो यथा – हरिश्च हरश्च गुरुश्च एषां समाहारः हरिहरगुरुः ॥

प्राणितूर्यसेनाङ्गानां द्वन्द्वैकवद्भावः। प्राण्यङ्गे यथा – पाणी च पादौ च मुखं च पाणिपादमुखम्। तूर्याङ्गे यथा – मार्दङ्गिकश्च वैणविकश्च मार्दङ्गिकवैणविकम्। शङ्खश्च पटहश्च शङ्खपटहम्। सेनाङ्गे यथा – राजन्याश्च रथाश्च अश्वाश्च राजन्यरथाश्वम् ॥

॥ इति द्वन्द्वः ॥

॥ अथाव्ययीभावः कथ्यते ॥

स यथा तटं तटं प्रत्यनुतटम्। गिरिं गिरिं प्रत्यनुगिरिम्। क्रममनतिक्रम्य वर्तत इति यथाक्रमम्। वेलायामित्यधिवेलम्। कुम्भस्य समीपे वर्तत इत्युपकुम्भम्। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्य अत्ययः अतिहिमम्। अव्यभावस्याव्ययत्वात् त्रिषु लिङ्गेषु समानं रूपम्॥

॥ इति षट्समासाः निर्णिताः ॥

॥ अथ अलुक्समासो लुक्समासश्च ॥

लुक्समासो यथा – तनुरेव लता तनुलता। कृष्णाः एव मेघाः कृष्णमेघाः।

अलुक्समासो यथा – वने चरतीति वनेचरः। पङ्के रोहतीति पङ्केरुहम्॥

मत्वर्थीयो यथा – बुद्धिरस्यास्तीति बुद्धिमान्। धनमस्यास्तीति धनवान्। धीरस्य भावो धीरता। जनानां समूहो जनता। घटस्य भावो घटत्वम्।

वृक्षशाखा तत्पुरुषः श्वेताश्वः कर्मधारयः।

रक्तवस्त्रो बहुव्रीहिर्द्वन्द्वश्चन्द्रदिवाकरौ॥१॥

यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेषस्य।

तल्लिङ्गं तद्वचनं सैव विभक्तिर्विशेषणस्यापि॥२॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।

वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्॥३॥

आदौ कर्तृपदं वाच्यं द्वितीयादिपदं ततः।

क्त्वातुमुल्ल्यप्च मध्ये कुर्यादन्ते क्रियापदम्॥४॥

॥ इति समासचक्रम्॥